यादित्यृण—यात् । तौ । भागधेयेनेति भाग—धे-
येन । प्रीणाति । न । आर्तिम् । एति । ऋच्छति ।
यजमानः ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके
पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ प्रथमकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः । )

---

द्वितीयानुवाके याज्याद्यङ्गजातं विधित्सुः पूर्वोक्तं द्रव्यविधिमनूद्य प्रशंसति—

परा वा एष यज्ञं पशून्वपति योऽग्नि-
मुद्वासयते पञ्चकपालः पुरोडाशो
भवति पाङ्क्तो यज्ञः पाङ्क्ताः
पशवो यज्ञमेव पशूनव रुन्धे, इति ।

परावपति विनाशयति । धानादिभिर्हविर्भिर्यज्ञः पाङ्क्तः । पङ्क्तिच्छन्दसः पशुहेतुत्वात्पशवोऽपि पाङ्क्ताः ॥

याज्यानुवाक्ये विधत्ते—

वीरहा वा एष देवानां योऽग्निमुद्वासयते
न वा एतस्य ब्राह्मणा ऋतायवः पुरा-
न्नमक्षन्पङ्क्त्यो याज्यानुवाक्या भवन्ति
पाङ्क्तो यज्ञः पाङ्क्तः पुरुषो देवानेव
वीरं निरवदायाग्निं पुनरा धत्ते, इति ।

देवानां मध्ये वीरोऽग्निः । तद्वधकारिणो यजमानस्यान्नमृतायवः सत्यमिच्छन्तो ब्राह्मणाः पुरा नैवाक्षन्नैव भुक्तवन्तः । "अश भोजने" इत्यस्य रूपम् । अग्ने तमद्याश्वं न इत्यादयश्चतस्र ऋचः पङ्क्तयः । तासु प्रधानहविषो द्वे स्विष्टकृतो द्वे । ताश्चाग्निकाण्डे—अग्निर्मूर्धेत्यनुवाक इष्टकोपधानार्थत्वेनाऽऽम्नाताः ।

---

१ क. ख. घ. ङ. 'तस्रोऽक्षरप' ।

इह तु वाचनिकस्तद्विधिः। शाखान्तरे तु याज्याप्रस्तावे समाम्नाताः। पुरुषस्य हस्तद्वयपादद्वयशिरोभिः पञ्चभिः पाङ्क्तत्वम्। देवानेव देवानामेव मध्ये वीरमग्निं निरवदायोत्सर्जनलक्षणवधभयान्निष्कृष्य ॥

चतसृष्वृक्षु विद्यमानाक्षरसंख्यां प्रशंसति—

शताक्षरा भवन्ति शतायुः पुरुषः शते-
न्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठति, इति।

अग्ने तमद्येत्येषा प्रथमा चतुर्विंशत्यक्षरा। अधा ह्यग्ने क्रतोः, आभिष्टे अद्येत्युभयोरेकैका पञ्चविंशत्यक्षरा। एभिर्नो अर्कैरित्यन्त्या षड्विंशत्यक्षरेति संभूय शतमक्षराणि। अण्डाभिमानिनो ब्रह्मणः स्वप्रमाणेन शतसंवत्सरायुष्ट्वात्तत्संततिपतितस्यापि सामान्येन शतायुष्ट्वं, धर्माधर्माभ्यां तूत्कर्षापकर्षौ भवतः। शतनाडीषु संचाराद्दशेन्द्रियेषु शतसंख्या ॥

प्रधानकर्मण[2] इव प्रयाजाज्यभागाद्यङ्गानामप्याग्नेयत्वं विधत्ते—

यद्वा अग्निराहितो नर्ध्यते ज्यायो
भागधेयं निकामयमानो यदाग्ने-
यꣳ सर्वं भवति सैवास्यर्द्धिः, इति।

यजमानस्य समृद्ध्यभावादग्नेः समृद्ध्यभावोऽनुमेयः ॥

समिधो अग्न आज्यस्य वियन्त्वित्यादिषु चतुर्षु प्रयाजमन्त्रेषु संबुद्ध्यन्तादग्निशब्दात्पूर्वं संबुद्धिसप्तमीतृतीयाद्वितीयाविभक्त्यन्तानामग्निशब्दानां क्रमेण प्रयोगं विधत्ते—

सं वा एतस्य गृहे वाक्सृज्यते यो[1]ऽग्निमु-
द्वासयते स वाचꣳ सꣳसृष्टां यजमान ईश्व-
रोऽनु पराभवितोर्विभक्तयो भवन्ति वाचो
विधृत्यै यजमानस्यापराभावाय, इति।

अग्निमुद्वासयितुरेतस्य वाग्गृहेऽवस्थितानां स्त्रीशूद्रादीनां वाग्भिः संसृज्यते तत्समा भवति। तां वाचमनु यजमानोऽपीतरवैलक्षण्यरूपस्योत्कर्षस्याभावात्पराभूतो भवति। एताभिस्तु विभक्तिभिः पुनराधेयस्याग्न्याधेयाद्वैलक्षण्ये सति यजमानस्य विलक्षणत्वेन वाग्विधृतौ सत्यां पराभवः शाम्यति। विभ-

१ ख. 'योद्वासन'। २ क. घ. ङ. च. 'णश्च प्र'।

क्तयः सूत्रे दर्शिताः—“ अंग्नेऽग्नेऽग्नावग्नेऽग्निनाऽग्नेऽग्निमग्न इति चतुर्षु प्रयाजेषु चतस्रो विभक्तीर्दधाति ” इति । तथा चैवं मन्त्रपाठः संपद्यते—“ समिधोऽग्नेऽग्न आज्यस्य वियन्तु । तनूनपादग्नावग्न आज्यस्य वेतु । इडो अग्निनाऽग्न आज्यस्य वियन्तु । बर्हिरग्निमग्न आज्यस्य वेतु ” इति ॥

यथोक्तविभक्तिविधिमनूद्य प्रशंसति—

विभक्तिं करोति ब्रह्मैव तदकः, इति ।

तत्पुनराधेयं ब्रह्मैवाग्न्याधेयात्परिवृढमेव करोति ॥

अत्र मन्त्राणां नीचध्वनिं विधत्ते—

उपाꣳशु यजति यथा वामं वसु
विविदानो गूहति तादृगेव तत्, इति ।

यथा लोके श्रेष्ठं वसु लब्धवान्पुरुषो गोपायति तद्वत् ॥

स्विष्टकृत्युच्चध्वनिं विधत्ते—

अग्निं प्रति स्विष्टकृतं निराह यथा वामं वसु विविदानः प्रकाशं जिगमिषति तादृगेव तत्, इति ।

निराह निःशेषध्वनिं कुर्यात् । यथा लोके श्रेष्ठं वसु लब्धवान्द्रव्यपतिः प्रसिद्धिं गन्तुमिच्छति तद्वत् ॥

पूर्वं विहितानां विभक्तीनां प्रयाजमन्त्रसंबन्धं विधत्ते—

विभक्तिमुक्त्वा प्रयाजेन वषट्करोत्यायतनादेव नैति , इति ।

विभक्तिवचनप्रकारो दर्शितः । तदुक्तिसहितेन प्रयाजमन्त्रेण वषट्कारपूर्वं यजेत । तथा सति पूर्वोक्तवाक्संसर्गकृतपराभवरहित आयतनात्स्वगृहान्नैति न निर्गच्छति, किं तु स्वगृहे प्रतितिष्ठति ॥

पुनरूर्जा निवर्तस्व, सह रय्या निवर्तस्वेत्याभ्यां मन्त्राभ्यामाग्नेयपुरोडाशस्याधस्तादुपरिष्टाच्चाऽऽहुतिद्वयं विधत्ते—

यजमानो वै पुरोडाशः पशव एते आहुती यदभितः पुरोडाशमेते आहुती जुहोति यजमानमेवोभयतः पशुभिः परि गृह्णाति, इति ।

---

१ क. घ. ङ. च. अग्नाग्ने । २ क. घ. ङ. च. °धोऽग्नाग्न ।

( पुनराधानसंबन्ध्यङ्गजातनिरूपणम् )

अत्र चोदकप्राप्तान्संभारानाधानमन्त्रांश्च वाजसनेयादिशाखान्तरमनुसृत्य पूर्वपक्षरूपेण निराचष्टे—

कृतयजुः संभृतसंभार इत्याहुर्न संभृत्याः संभारा न यजुः कर्तव्यमिति, इति।

यजुःशब्देन सर्पराज्ञीप्रभृतय आधानमन्त्रा विवक्षिताः। संभारशब्देन सिकतोषादिसप्तमृद्विशेषाः[1] सप्त विवक्षिताः। प्रथमाधाने यजुषामुच्चारितत्वात्संभाराणां च संपादितत्वादस्यापि कर्मविशेषस्याऽऽधानादत्यन्तभेदाभावेन यजुःसंभारयोः सिद्धत्वात्तदुभयं पुनर्न कर्तव्यमिति पूर्वः पक्षः। प्रथमाधाने वाजसनेयिमतं सूत्रकार उदाजहार—"सप्त पार्थिवान्संभारानाहरत्येवं वानस्पत्यान्पञ्च पञ्च वा भूयसो वा पार्थिवान्संभारान्संभरेदिति वाजसनेयकम्" इति॥

सिद्धान्तमाह—

अथो खलु संभृत्या एव संभाराः कर्तव्यं यजुर्यज्ञस्य समृद्ध्यै, इति।

अथोशब्दः पूर्वपक्षव्यावृत्त्यर्थः। अत्र सूत्रकारः पक्षद्वयमुदाजहार—"कृताकृताः संभारा यजूꣳषि च भवन्त्यपि वा पञ्च पार्थिवान्संभारानाहरत्येवं वानस्पत्यान्" इति॥

दक्षिणां विधत्ते—

पुनर्निष्कृतो रथो दक्षिणा पुनरुत्स्यूतं वासः पुनरुत्सृष्टोऽनड्वान्पुनराधेयस्य समृद्ध्यै,[2] इति।

भग्नः सन्[3]दृढीकृतः पुनर्निष्कृत[4]ः। छिन्नं सत्सूचीतन्तुभ्यां स्यूतं पुनरुत्स्यूतम्। दौर्बल्येन भारं वोढुमशक्ततया परित्यक्तः सन्[5]कथंचित्पोषणेन[6] शक्तीकृतः पुनरुत्सृष्टः॥

तूष्णीमेव होतव्यमिति प्रथमाधानस्यामन्त्रत्वेन यदग्निहोत्रं विहितं तदत्र चोदकप्राप्तं तदपोद्य समन्त्रकं विधत्ते—

सप्त ते अग्ने समिधः सप्त जिह्वा

---

१ ख. °शेषाश्च वि°। २ ख. °ति। आदौ रथो भ°। ३ ख. सन्पुनर्दृढी°। ४ ख. °तः। एतादृशो रथो दक्षिणा। दक्षिणेति सर्वत्र योजनीयम्। छि°। ५ ख. सन्केनचि°। ६ ख. °न पुनः श°।

इत्यग्निहोत्रं जुहोति यत्रयत्रैवास्य
न्यक्तं तत एवैनमव रुन्धे, इति ।

मन्त्रस्तूपरिष्टाद्व्याख्यास्यते । अत्र(स्य) पुनराधेयदेवस्याग्नेर्यद्यदङ्गं यस्मिन्यस्मिन्प्रदेशे न्यक्तं निमग्नं विस्मृतं तत एव प्रदेशात्साङ्गमेनमग्निं संपादयति ॥

अनुनिर्वाप्यं हविर्विधत्ते—

वीरहा वा एष देवानां योऽग्निमुद्वासयते तस्य वरुण एवर्णयादाग्निवारुणमेकादशकपालमनु निर्वपेद्यं चैव हन्ति यश्चास्यर्णयात्तौ भागधेयेन प्रीणाति नाऽऽर्तिमार्च्छति यजमानः॥, इति ॥

ऋणिनमिव यातयति[1] पीडयतीत्यृणयात् । तौ वध्याग्निपीडयितृवरुणौ तोषयति ॥

अथ मीमांसा ।

दशमाध्यायस्य तृतीयपादे चिन्तितम्—

" एकादिना समुच्चेयं पुनर्निष्कृत इत्यदः ।
बाधकं वा समुच्चेयमुभयीरित्युदीरणात् ॥
आधानदक्षिणोपेतमुभयीरित्यनूद्यते ।
ददातीत्यविधायित्वात्कार्यैक्याद्बाधकं भवेत् " इति ॥

आधाने विकल्पिता गोद्रव्यदक्षिणा द्रव्यान्तरदक्षिणाश्च बहवः श्रूयन्ते—" एका देया षड्देया द्वादश देयाः " इत्यादिना । पुनराधेये तु पुनर्निष्कृतो रथ इत्यादि श्रुतम् । भग्नः सन्पुनः समाहितः पुनर्निष्कृतः । सेयं पुनर्निष्कृतादिदक्षिणा किमतिदिष्टयैकादिदक्षिणया समुच्चीयत उत तां बाधत इति संशयः । उभयीर्दक्षिणा ददात्याग्न्याधेयिकीः पौनराधेयिकीश्चेत्युक्तत्वात्समुच्चय इति पूर्वः पक्षः । ददातीति वर्तमाननिर्देशस्य विधित्वाभावादाधानकाले पूर्वं दत्तं पुनराधानकाले दीयमानं च मिलित्वोभयीरित्यनूद्यते । दक्षिणात्वरूपस्य कार्यस्यैकत्वादुपदिष्टमतिदिष्टस्य बाधकम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

[1] क. घ. ङ. च. याती' ।

(पुनराधानमन्त्राः)

(अथ प्रथमाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः।)

भूमिर्भूम्ना द्यौर्वरिणाऽन्तरिक्षं महित्वा। उपस्थे ते देव्यदितेऽग्निमन्नादमन्नाद्यायाऽऽदधे। आऽयं गौः पृश्निरक्रमीदसदन्मातरं पुनः। पितरं च प्रयन्त्सुवः। त्रिंशद्धाम वि राजति वाक्पतङ्गाय शिश्रिये। प्रत्यस्य वह द्युभिः। अस्य प्राणादपानत्यन्तश्चरति रोचना। व्यख्यन्महिषः सुवः। यत्त्वा (१) क्रुद्धः परोवप मन्युना यदवर्त्या। सुकल्पमग्ने तत्तव पुनस्त्वोद्दीपयामसि। यत्ते मन्युपरोप्तस्य पृथिवीमनु दध्वसे। आदित्या विश्वे तद्देवा वसवश्च समाभरन्। मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु। बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्ताम्। सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त (२) ऋषयः सप्त धाम प्रियाणि। सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरा पृणस्वा घृतेन। पुनरूर्जा नि वर्तस्व पुनरग्न इषाऽऽयुषा। पुनर्नः पाहि विश्वतः। सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया। विश्वप्स्निया

विश्वतस्परि । लेकः सलेकः सुलेकस्ते नं आदित्या आज्यं जुषाणा वियन्तु केतः सकेतः सुकेतस्ते नं आदित्या आज्यं जुषाणा वियन्तु विवस्वाꣳ अदितिर्देवजूतिस्ते नं आदित्या आज्यं जुषाणा वियन्तु (३)॥

( त्वा जिह्वाः सप्त सुकेतस्ते नव्रयोदश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ प्रथमाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः । )

---

भूमिः । भूम्ना । द्यौः । वरिणा । अन्तरिक्षम् । महित्वेतिं महि—त्वा । उपस्थ इत्युप—स्थे । ते । देवि । अदिते । अग्निम् । अन्नादमित्यन्न—अदम् । अन्नाद्यायेत्यन्न—अद्याय । एतिं । दधे । एतिं । अयम् । गौः । पृश्निः । अक्रमीत् । असनत् । मातरम् । पुनः । पितरम् । च । प्रयन्निति प्र—यन् । सुवः । त्रिꣳशत् । धाम । वीतिं । राजति । वाक् । पतङ्गाय । शिश्रिये । प्रतीतिं । अस्य । वह । द्युभिरिति द्यु—भिः । अस्य । प्राणादिति प्र—अनात् । अपानतीत्यप—अनती । अन्तः । चरति । रोचना । वीतिं । अख्यत् । महिषः । सुवः । यत् । त्वा । (१)

क्रुद्धः। परोवपेतिं परा—उवपं। मन्युनां। यत्। अवं-र्त्यां।सुकल्पमितिं सु-कल्पंम्। अग्ने। तत्। तवं। पुनंः। त्वा। उदितिं। दीपयामसि। यत्। ते। मन्युपंरो-प्तस्येतिं मन्यु—परोप्तस्य। पृथिवीम्। अन्वितिं। दध्वसे। आदित्याः। विश्वें। तत्। देवाः। वसंवः। च। समाभंरन्नितिं सम्—आभंरन्। मनंः। ज्योतिंः। जुषताम्। आज्यंम्। विच्छिंन्नमिति वि—छिन्नम्। यज्ञम्। समितिं। इमम्। दधातु। बृहस्पतिंः। तनुताम्। इमम्। नः। विश्वें। देवाः। इह। माद-यन्ताम्। सप्त। ते। अग्ने। समिध इतिं सम्—इधंः। सप्त। जिह्वाः। सप्त। (२) ऋषंयः। सप्त। धामं। प्रियाणिं। सप्त। होत्राः। सप्तधेतिं सप्त—धा। त्वा। यजन्ति। सप्त। योनीः। एतिं। पृणस्व। घृतेनं। पुनंः। ऊर्जा। नीतिं। वर्तस्व। पुनंः। अग्ने। इषा। आयुंषा। पुनंः। नः। पाहि। विश्वतंः। सह। रय्या। नीतिं। वर्तस्व। अग्ने। पिन्वंस्व। धारंया। विश्वप्स्नियेतिं विश्व—प्स्निया। विश्वतंः। परिं। लेकंः। सलेक इति स—लेकः। सुलेक इतिं सु—लेकंः। ते। नः। आदित्याः। आज्यंम्। जुषाणाः। वियन्तु। केतंः। सकेत इति स—केतः।

सुकेत इति सु—केतः । ते । नः । आदित्याः । आज्यम् । जुषाणाः । वियन्तु । विवस्वान् । अदितिः । देवजूतिरिति देव—जूतिः । ते । नः । आदित्याः । आज्यम् । जुषाणाः । वियन्तु ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके पञ्चम-
प्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ प्रथमकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः । )

---

प्रथमद्वितीययोः पुनराधेयस्य प्रधानविधिस्तदङ्गानि च निरूपितानि । तृतीये त्वाधानमन्त्रा आम्नायन्ते ।

कल्पः—" भूमिर्भूम्नेति सर्पराज्ञीभिर्गार्हपत्यमादधाति यत्त्वा क्रुद्धः परोवपेति दक्षिणाग्निं यत्ते मन्युपरोप्तस्येतीतरान् " इति ।

आहवनीयसभ्यावसथ्यानित्यर्थः । त एते षण्मन्त्राः ॥

तत्र प्रथम एवं पठ्यते—

भूमिर्भूम्ना द्यौर्वरिणाऽन्तरिक्षं महित्वा । उपस्थे
ते देव्यदितेऽग्निमन्नादमन्नाद्यायाऽऽदधे॥, इति ॥

हे गार्हपत्यप्रदेश त्वं लोकत्रयात्मकोऽसि । तत्र भूम्ना बाहुल्येन भूमिरसि । वरिणा वरिम्णा श्रेष्ठत्वेन द्यौरसि । महित्वा महत्त्वेनान्तरिक्षमसि । हेऽदिते भूमे तत्प्रदेशरूपे देवि तवोत्सङ्गेऽन्नभोक्तारं गार्हपत्याग्निं यजमानस्यादनयोग्यान्नसिद्ध्यर्थमादधे ॥

अथ द्वितीयः—

आऽयं गौः पृश्निरक्रमीदसनन्मातरं
पुनः । पितरं च प्रयन्त्सुवः॥, इति ॥

अयं गार्हपत्य आदित्यरूपेण गौर्गमनशीलः पृश्निः श्वेतवर्णो जगदाक्रमीत् । आक्रमणप्रकार एव स्पष्टी क्रियते—पुनर्मातरं पृथिवीमसनदासीदत्प्रा-

---

१ क. घ. ङ. च. °ते—पुनः पु° ।

भोदित्यर्थः । सुवः स्वर्गरूपं पितरं च प्रयत्नप्रकर्षेण गच्छन्नवस्थितः । द्यौः पिता पृथिवी मातेति श्रुत्यन्तरात्तयोर्मातापितृत्वम् ॥

अथ तृतीयः—

त्रिꣳशद्धाम वि राजति वाक्पतङ्गाय शिश्रिये । प्रत्यस्य वह द्युभिः॥, इति ॥

आदित्यरूपस्य गार्हपत्यस्य संबन्धि त्रिंशत्संख्याकं धाम मुहूर्तरूपं तेजो विशेषेण राजते । अह्नः पञ्चदश मुहूर्ता रात्रेः पञ्चदश । किं च वैदिकस्तुतिरूपा वाक्पतङ्गाय पक्षिवदाकाशसंचारिणमादित्यं शिश्रिय आश्रितवतीत्यर्थः । अत एवान्यत्राऽऽम्नायते—" ऋग्भिः पूर्वाह्णे दिवि देव ईयते " इत्यादि । हे तादृग्गार्हपत्य त्वां प्रति यदस्माभिरुद्वासनरूपं प्रतिकूलमाचरितं तत्सर्वमस्य प्रतिक्षिप्य मनसि मा कृथाः । द्युभिर्ज्वालारूपाभिर्वहास्मदीयं हविर्देवेषु प्रापय ॥

अथ चतुर्थः—

अस्य प्राणादपानत्यन्तश्चरति रोचना । व्यख्यन्महिषः सुवः॥, इति ॥

अस्याऽऽदित्यस्य रोचना दीप्तिः प्राणादुच्छ्वाससदृशादुदयादपानती निश्वासतुल्यमस्तमयं गच्छन्ती द्यावापृथिव्योरन्तश्चरति । महति मण्डले सीदतीति महिष आदित्यः सुवः स्वर्गं व्यख्यद्यजमानेभ्यः प्रकाशितवान् । आदित्यरूपेण स्तूयमान हे गार्हपत्य त्वामादधामीत्यभिप्रायः ॥

अथ पञ्चमः—

यत्त्वा क्रुद्धः परोवप मन्युना यदवर्त्या । सुकल्पमग्ने तत्तव पुनस्त्वोद्दीपयामसि, इति ।

हे दक्षिणाग्ने क्रुद्धः कोपपराधीनोऽहं तेन मन्युना त्वां परोवप । उवपेति लिडुत्तमपुरुषः । परोप्तवानुद्वासितवानस्मीति यच्चावर्त्या समृद्ध्यभावलक्षणेन दारिद्र्येणोद्वासितवानस्मीति हेऽग्ने तव प्रसादात्तत्सुकल्पं सुष्ठु कृतमस्तु । पुनरपि त्वां वयमुद्दीपयामः ॥

अथ षष्ठः—

यत्ते मन्युपरोप्तस्य पृथिवीमनु दध्वसे । आदित्या विश्वे तद्देवा वसवश्च समाभरन्॥, इति ॥

हे आहवनीय मदीयकोपेनोद्वासितस्य तव यत्तेजः पृथिवीमनुप्रविश्य ध्वस्तं तत्तेज आदित्यादयः समाहरन्तु ॥

कल्पः—" मनो ज्योतिर्जुषतामिति बृहस्पतिवत्यर्चोपतिष्ठते " इति ।

पाठस्तु—

मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ
समिमं दधातु । बृहस्पतिस्तनुतामिमं
नो विश्वे देवा इह मादयन्ताम्॥, इति ॥

उद्वासनापराधपरिहाराय मनो माननीयमग्नेर्ज्योतिर्हव्यमाज्यं सेवताम् । विच्छिन्नमिमं यज्ञं संदधातु । बृहस्पतिरस्माकमिमं यज्ञं विस्तीर्णं करोतु । सर्वेऽपि देवा इह कर्मणि मादयन्तां तृप्तियुक्ता भवन्तु ॥

कल्पः—" सप्त ते अग्ने समिधः सप्त जिह्वा इत्यग्निहोत्रं जुहोति " इति ।

पाठस्तु—

सप्त ते अग्ने समिधः सप्त जिह्वाः
सप्त ऋषयः सप्त धाम प्रियाणि ।
सप्त होत्राः सप्तधा त्वा यजन्ति
सप्त योनीरा पृणस्वा घृतेन॥, इति ॥

हेऽग्ने तव समिधः सप्तसंख्याका अश्वत्थोदुम्बरपलाशशमीविकङ्कताशनिहतवृक्षपुष्करपर्णरूपाः । अत एव सूत्रकारो यथोक्तान्संभारान्समन्त्रकाननुक्रम्य, इति वानस्पत्या इत्युपसंजहार । ज्वालारूपा जिह्वाश्च सप्त । तथा चाऽऽथर्वणिका आमनन्ति—

" काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः " ॥

[ मुण्ड० १-२-४ ] इति ।

ऋषयो मन्त्राः । ते च यथोक्तसमित्संपादनार्थाः सप्तसंख्याका अश्वो रूपं कृत्वा यदश्वत्थेऽतिष्ठ इत्यादयः समाम्नाताः । प्रियाणि धाम स्थानान्याहवनीयगार्हपत्यदक्षिणाग्निसभ्यावसथ्यप्राजहिताग्नीध्रीयाख्यानि(णि) सोमयागे वह्निधारकाणि सप्तसंख्याकानि । होत्रा होतृप्रमुखा वषट्कर्तारो होता प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाऽऽग्नीध्रोऽच्छावा-

( पुनराधानमन्त्राः )

कश्चेति सप्तसंख्याकाः । त्वां यजमानाः सप्तधा यजन्ति । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडश्यतिरात्रोऽप्तोर्यामो वाजपेयश्चेति सप्त प्रकाराः । तादृशस्त्वं सप्त योनीराहवनीयादिस्थानानि घृतेन सर्वतः पूरय ॥

कल्पः—"पुनरूर्जा सह रय्येत्यभितः पुरोडाशमाहुती जुहोति पुनरूर्जेति वा पुरस्तात्प्रयाजानां सह रय्येत्युपरिष्टादनूयाजानाम्" इति ।

प्रथममन्त्रपाठस्तु—

पुनरूर्जा नि वर्तस्व पुनरग्न इषाऽऽ-
युषा । पुनर्नः पाहि विश्वतः॥, इति ॥

हेऽग्ने त्वं मयोद्वासितोऽप्यूर्जा क्षीरादिरसेन सह पुनर्निवर्तस्वात्राऽऽगच्छ । इषाऽन्नेनाऽऽयुषा च सह पुनरागच्छ । अस्मान्पुनः पुनः कृताद्विश्वतः सर्वस्मादपराधात्पाहि ॥

द्वितीयमन्त्रपाठस्तु—

सह रय्या नि वर्तस्वाग्ने पिन्वस्व
धारया । विश्वप्स्निया विश्वतस्परि॥, इति ॥

हेऽग्ने रय्या धनेन सह निवर्तस्व । प्सा भक्षण इति धातुः । विश्वेन प्सायते भक्ष्यते पीयत इति विश्वप्स्नी । तादृश्या वृष्टिधारया विश्वतस्परि सर्वेषां तृणधान्यलतापादपानामुपरि पिन्वस्व सिञ्च ॥

कल्पः—"यस्तृतीयमादधीत स एतान्होमाञ्जुहुयाल्लेकः सलेक इति" इति ।

मन्त्रत्रयपाठस्तु—

लेकः सलेकः सुलेकस्ते न आदित्या
आज्यं जुषाणा वियन्तु केतः सकेतः
सुकेतस्ते न आदित्या आज्यं जुषाणा
वियन्तु विवस्वाँ अदितिर्देवजूतिस्ते
न आदित्या आज्यं जुषाणा वियन्तु॥, इति ॥

नवसंख्याका लेकादिनामका य आदित्यास्ते सर्वे जुषाणाः प्रीयमाणा अस्माकमाज्यं वियन्तु पिबन्तु ॥

अत्र विनियोगसंग्रहः—

" चतुर्भिर्भूमिरित्याद्यैरादध्यात्पश्चिमानलम् ।
दक्षिणाग्निं तु यत्त्वेति यदित्याहवनीयकम् ॥ १ ॥
मनस्तूपस्थितिः सप्त जुहुयादग्निहोत्रकम् ।
पुनर्द्वाभ्यां पुरोडाशमभितो जुहुयादथ ॥ २ ॥
तृतीयमादधानस्य लेकाद्या होममन्त्रकाः ॥ ३ ॥ " इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ प्रथमाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः । )

---

भूमिर्भूम्ना द्यौर्वरिणेत्याहाऽऽशिषैवैनमा धत्ते सर्पा वै जीर्यन्तोऽमन्यन्त स एतं कसर्णीरः काद्रवेयो मन्त्रमपश्यत्ततो वै ते जीर्णास्तनूरपाघ्नत सर्पराज्ञिया ऋग्भिर्गार्हपत्यमा दधाति पुनर्नवमेवैनमजरं कृत्वाऽऽ धत्तेऽथो पूतमेव पृथिवीमन्नाद्यं नोपानमत्सैतम् ( १ ) मन्त्रमपश्यत्ततो वै तामन्नाद्यमुपानमद्यत्सर्पराज्ञिया ऋग्भिर्गार्हपत्यमादधात्यन्नाद्यस्यावरुद्ध्या अथो अस्यामेवैनं प्रतिष्ठितमा धत्ते यत्त्वा क्रुद्धः परोवपेत्याहापह्नुत एवास्मै तत्पुनस्त्वोद्दीपयामसीत्याह समिन्ध एवैनं यत्ते मन्युपरोप्तस्येत्याह देवताभिरेव ( २ ) एनꣳ सं

भरति वि वा एतस्यं यज्ञश्छिद्यते योऽग्निमुं-द्वासयंते बृहस्पतिवत्यर्चोपं तिष्ठते ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैव यज्ञꣳ सं दंधाति विच्छिन्नं यज्ञꣳ समिमं दंधात्वित्याह संतत्यै विश्वें देवा इह मांदयन्तामित्याह संतत्यैव यज्ञं देवेभ्योऽनुं दिशति सप्त तें अग्ने समिधंः सप्त जिह्वाः ( ३ ) इत्याह सप्तसंप्त वै संप्तधाऽग्नेः प्रियास्तनुवस्ता एवावं रुन्धे पुनंरूर्जा सह रय्येत्यभितंः पुरोडाशमाहुंती जुहोति यजंमा-नमेवोर्जा चं रय्या चोभयतः परिं गृह्णात्या-दित्या वा अस्माल्लोकादमुं लोकमांयन्तेंऽमु-ष्मिंल्लोके व्यंतृष्यन्त इमं लोकं पुनंरभ्यवेत्या-ग्निमाधायैतान्होमांनजुहवुस्त आंर्ध्नुवन्ते सुवर्गं लोकमांयन्यः पंराचीनं पुनराधेयांदग्निमाद-धींत स एतान्होमांञ्जुहुयाद्यामेवाऽऽदित्या ऋद्धिमार्ध्नुंवन्तामेवर्ध्नोति ( ४ ) ॥

( सैतं देवतांभिरेव जिह्वा एतान्पञ्चविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( पूर्वानुवाकोक्तमन्त्रव्याख्यानम् )

( अथ प्रथमाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः । )

---

भूमिः । भूम्ना । द्यौः । वरिणा । इति । आह । आशिषेत्या—शिषा । एव । एनम् । एति । धत्ते । सर्पाः । वै । जीर्यन्तः । अमन्यन्त । सः । एतम् । कसर्णीरः । काद्रवेयः । मन्त्रम् । अपश्यत् । ततः । वै । ते । जीर्णाः । तनूः । अपेति । अघ्नत । सर्पराज्ञिया इति सर्प—राज्ञियाः । ऋग्भिरित्यृक्—भिः । गार्हपत्यमिति गार्ह—पत्यम् । एति । दधाति । पुनर्नवमिति पुनः—नवम् । एव । एनम् । अजरम् । कृत्वा । एति । धत्ते । अथो इति । पूतम् । एव । पृथिवीम् । अन्नाद्यमित्यन्न—अद्यम् । न । उपेति । अनमत् । सा । एतम् । ( १ ) मन्त्रम् । अपश्यत् । ततः । वै । ताम् । अन्नाद्यमित्यन्न—अद्यम् । उपेति । अनमत् । यत् । सर्पराज्ञिया इति सर्प—राज्ञियाः । ऋग्भिरित्यृक्—भिः । गार्हपत्यमिति गार्ह—पत्यम् । आदधातीत्या—दधाति । अन्नाद्यस्येत्यन्न—अद्यस्य । अवरुद्ध्या इत्यव—रुद्ध्यै । अथो इति । अस्याम् । एव । एनम् । प्रतिष्ठितमिति प्रति—स्थितम् । एति । धत्ते । यत् । त्वा । क्रुद्धः । परोवपेति परा—उ-

( पूर्वानुवाकोक्तमन्त्रव्याख्यानम् )

वर्प । इति । आह । अपेति । ह्नुते । एव । अस्मै । तत् । पुनः । त्वा । उदिति । दीपयामसि । इति । आह । समिति । इन्धे । एव । एनम् । यत् । ते । मन्युपरोप्तस्येति मन्यु—परोप्तस्य । इति । आह । देवताभिः । एव । ( २ ) एनम् । समिति । भरति । वीति । वै । एतस्य । यज्ञः । छिद्यते । यः । अग्निम् । उद्वासयत इत्युत्—वासयंते । बृहस्पति-वत्येति बृहस्पति—वत्या । ऋचा । उपेति । तिष्ठते । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । यज्ञम् । समिति । दधाति । विच्छिन्नमिति वि—छिन्नम् । यज्ञम् । समिति । इमम् । दधातु । इति । आह । संतत्या इति सं—तत्यै । विश्वे । देवाः । इह । मादयन्ताम् । इति । आह । संतत्येति । सं—तत्य । एव । यज्ञम् । देवेभ्यः । अन्विति । दिशति । सप्त । ते । अग्ने । समिध इति । सम्—इधः । सप्त । जिह्वाः । (३) इति । आह । सप्त-सप्तेति सप्त—सप्त । वै । सप्तधेति सप्त—धा । अग्नेः । प्रियाः । तनुवः । ताः । एव । अवेति । रुन्धे । पुनः । ऊर्जा । सह । रय्या । इति । अभितः । पुरोडाशम् । आहुती इत्या—हुती । जुहोति । यजमा-

नम् । एव । ऊर्जा । च । रय्या । च । उभयतः । परीति । गृह्णाति । आदित्याः । वै । अस्मात् । लोकात् । अमुम् । लोकम् । आयन् । ते । अमुष्मिन् । लोके । वीति । अतृष्यन् । ते । इमम् । लोकम् । पुनः । अभ्यवेत्येत्यभि—अवेत्य । अग्निम् । आधायेत्या—धाय । एतान् । होमान् । अजुहवुः । ते । आर्ध्नुवन् । ते । सुवर्गमिति सुवः—गम् । लोकम् । आयन् । यः । पराचीनम् । पुनराधेयादिति पुनः—आधेयात् । अग्निम् । आदधीतेत्या—दधीत । सः । एतान् । होमान् । जुहुयात् । याम् । एव । आदित्याः । ऋद्धिम् । आर्ध्नुवन् । ताम् । एव । ऋध्नोति ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ प्रथमकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः । )

---

चतुर्थानुवाके पूर्वोक्ता मन्त्रा व्याख्यायन्ते । तत्राग्न्याधायेत्येतस्य मन्त्रपदस्याभिप्रायमाह—

भूमिर्भूम्ना द्यौर्वरिणेत्याहाऽऽशिषैवैनमा धत्ते, इति ।

आशिषाऽन्नं प्राप्तुमिच्छया ॥

चतसृभिर्ऋग्भिराधानं विधत्ते—

सर्पा वै जीर्यन्तोऽमन्यन्त स एतं कस-

(पूर्वानुवाकोक्तमन्त्रव्याख्यानम्)

र्णीरः काद्रवेयो मन्त्रमपश्यत्ततो वै ते जीर्णास्तनूरपाघ्नत सर्पराज्ञिया ऋग्भिर्गार्हपत्यमा दधाति पुनर्नवमेवैनमजरं कृत्वाऽऽ धत्तेऽथो पूतमेव, इति।

जीर्यन्तो जरां प्राप्नुवन्तोऽमन्यन्त कोऽस्या जरायाः प्रतीकार इति विचारितवन्तः। तदा कसर्णीरनामकः कद्रूपुत्रो भूमिरित्यादिकं मन्त्रसंघमपश्यत्। तन्मन्त्रसामर्थ्यात्ते सर्पा जीर्णाः शरीरत्वचोऽपहत्य कोमलास्त्वचः प्राप्नुवन्। सर्पाणां राज्ञी भूमिः। इयं वै सर्पतो राज्ञीत्यन्यत्राऽऽम्नानात्। तस्या ऋचो भूमिर्भूम्नेत्यादयस्ताभिराहितो वह्निर्जरां परित्यज्य नूतनः पूतश्च भवति॥

तमेव विधिमनूद्य प्रशंसति—

पृथिवीमन्नाद्यं नोपानमत्सैतं मन्त्रमपश्यत्ततो वै तामन्नाद्यमुपानमद्यत्सर्पराज्ञिया ऋग्भिर्गार्हपत्यमादधात्यन्नाद्यस्यावरुद्ध्या अथो अस्यामेवैनं प्रतिष्ठितमा धत्ते, इति।

अन्नाद्यायेत्युक्तत्वात्तत्प्राप्तिः। उपस्थे ते देवीत्युक्तत्वाद्भूमौ प्रतिष्ठितत्वम्। यदाह(दहं)परोवप तत्सुकल्पमित्युक्तिर्बालस्येवाग्नेः सान्त्वनायापलाप इत्याह—

यत्त्वा क्रुद्धः परोवपेत्याहाप ह्नुत एवास्मै तत्, इति।

उद्दीपयामसीत्यस्याभिप्रायमाह—

पुनस्त्वोद्दीपयामसीत्याह समिन्ध एवैनम्, इति।

आदित्या विश्वे तादित्यादेरभिप्रायमाह—

यत्ते मन्युपरोप्तस्येत्याह देवताभिरेवैनꣳ सं भरति, इति।

उपस्थानं विधत्ते—

वि वा एतस्य यज्ञश्छिद्यते योऽग्निमुद्वासयते बृहस्पतिवत्यर्चोप तिष्ठते ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैव यज्ञꣳ सं दधाति, इति।

---

१ ख. 'त्युक्तेर्बा'।

बृहस्पतिशब्दोऽस्यामस्तीति बृहस्पतिवती ॥

तं शब्दं प्रशस्य संदधात्वितिशब्दस्याभिप्रायमाह—

विच्छिन्नं यज्ञꣳ समिमं दधात्वित्याह संतत्यै, इति।

देवसंबोधनस्योपयोगमाह—

विश्वे देवा इह मादयन्तामित्याह संत-
त्यैव यज्ञं देवेभ्योऽनु दिशति, इति।

यज्ञं संततं कृत्वा देवेभ्यस्तत्कथनाय संबोधनम् ॥

समिदादिषु सप्तसंख्याया उपयोगमाह—

सप्त ते अग्ने समिधः सप्त जिह्वा
इत्याह सप्तसप्त वै सप्तधाऽग्नेः
प्रियास्तनुवस्ता एवाव रुन्धे, इति।

समिदादयः सर्वे पदार्थाः प्रत्येकं सप्त सप्त विनिर्दिश्यन्ते। यस्मात्सप्तधाऽवस्थिताः पदार्था अग्नेः प्रियास्तनुवस्तस्मात्तदवरोधाय सप्तसंख्या ॥

द्वितीयानुवाके विहितयोराहुत्योर्मन्त्रौ विनियुङ्क्ते—

पुनरूर्जा सह रय्येत्यभितः पुरोडा-
शमाहुती जुहोति यजमानमेवोर्जा च
रय्या चोभयतः परि गृह्णाति, इति।

तृतीयाधाने होमान्विधत्ते—

आदित्या वा अस्माल्लोकादमुं लोकमाय-
न्तेऽमुष्मिँल्लोके व्यतृष्यन्त इमं लोकं पुनर-
भ्यवेत्याग्निमाधायैतान्होमानजुहवुस्त आर्ध्नु-
वन्ते सुवर्गं लोकमायन्यः पराचीनं पुनरा-
धेयादग्निमादधीत स एतान्होमाञ्जुहुयाद्यामे-
वाऽऽदित्या ऋद्धिमार्ध्नुवन्तामेवर्ध्नोति॥, इति ॥

आदित्या आधानपुनराधाने अनुष्ठाय सुवर्गं गत्वा तत्र व्यतृष्यन्विशेषेण

(अग्न्युपस्थानम्)

तृप्तां प्राप्ताः। समृद्धिर्न पर्याप्तेति मत्वा भूमावागत्य लेकादिमन्त्रैर्हुत्वाऽतिशयेन समृद्धिं गताः। ततः पुनराधेयादूर्ध्वमग्निमाधाय लेकादिभिर्जुहुयात्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः॥ ४॥

---

(अथ प्रथमाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः।)

---

उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये। आरे अस्मे च शृण्वते। अस्य प्रत्नामनु द्युतꣳ शुक्रं दुदुह्रे अह्रयः। पयः सहस्रसामृषिम्। अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपाꣳ रेताꣳसि जिन्वति। अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः। यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभुवं विशेविशे। उभा वामिन्द्राग्नी आहुवध्यै (१) उभा राधसः सह मादयध्यै। उभा दातारा-विषाꣳ रयीणामुभा वाजस्य सातये हुवे वाम्। अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः। तं जानन्नग्न आ रोहाथा नो वर्धया रयिम्। अग्न आयूꣳषि पवस आ सुवोर्जमिषं च नः। आरे बाधस्व दुच्छुनाम्। अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम्। दधत्पोषꣳ रयिम् (२)

मयि । अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान्वक्षि यक्षि च । स नः पावक दीदिवोऽग्ने देवाꣳ इहाऽऽवह । उप यज्ञꣳ हविश्च नः । अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः । शुची रोचत आहुतः । उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतीꣳष्यर्चयः । आयुर्दा अग्नेऽस्यायुर्मे (३) देहि वर्चोदा अग्नेऽसि वर्चो मे देहि तनूपा अग्नेऽसि तनुवं मे पाह्यग्ने यन्मे तनुवा ऊनं तन्म आ पृण चित्रावसो स्वस्ति ते पारमशीयेन्धानास्त्वा शतꣳ हिमा द्युमन्तः समिधीमहि वयस्वन्तो वयस्कृतं यशस्वन्तो यशस्कृतꣳ सुवीरासो अदाभ्यम् । अग्ने सपत्नदम्भनं वर्षिष्ठे अधि नाके । सं त्वमग्ने सूर्यस्य वर्चसाऽगथाः समृषीणाꣳ स्तुतेन सं प्रियेण धाम्ना । त्वमग्ने सूर्यवर्चा असि सं मामायुषा वर्चसा प्रजया सृज ( ४ ) ॥

( आहुवध्यै पोषꣳ रयिं मे वर्चसा सप्तदश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

———

(अथ प्रथमाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः।)

---

उपप्रयन्त इत्युप—प्रयन्तः। अध्वरम्। मन्त्रम्। वोचेम। अग्नये। आरे। अस्मे इति। च। शृण्वते। अस्य। प्रत्नाम्। अन्विति। द्युतम्। शुक्रम्। दुदुह्रे। अह्रयः। पयः। सहस्रसामिति सहस्र—साम्। ऋषिम्। अग्निः। मूर्धा। दिवः। ककुत्। पतिः। पृथिव्याः। अयम्। अपाम्। रेताꣳसि। जिन्वति। अयम्। इह। प्रथमः। धायि। धातृभिरिति धातृ—भिः। होता। यजिष्ठः। अध्वरेषु। ईड्यः। यम्। अप्नवानः। भृगवः। विरुरुचुरिति वि—रुरुचुः। वनेषु। चित्रम्। विभुवमिति वि—भुवम्। विशेविश इति विशे—विशे। उभा। वाम्। इन्द्राग्नी इतीन्द्र—अग्नी। आहुवध्यै। (१) उभा। राधसः। सह। मादयध्यै। उभा। दातारौ। इषाम्। रयीणाम्। उभा। वाजस्य। सातये। हुवे। वाम्। अयम्। ते। योनिः। ऋत्वियः। यतः। जातः। अरोचथाः। तम्। जानन्। अग्ने। एति। रोह। अथ। नः। वर्धय। रयिम्। अग्ने। आयूꣳषि। पवसे। एति। सुव। ऊर्जम्। इषम्। च। नः। आरे। बाधस्व। दुच्छुनाम्। अग्ने। पवस्व। स्वपा

इति सु—अपाः । अस्मे इति । वर्चः । सुवीर्यमिति सु—वीर्यम् । दधत् । पोषम् । रयिम् । ( २ ) मयि । अग्ने । पावक । रोचिषा । मन्द्रया । देव । जिह्वया । एति । देवान् । वक्षि । यक्षि । च । सः । नः । पावक । दीदिवः । अग्ने । देवान् । इह । एति । वह । उपेति । यज्ञम् । हविः । च । नः । अग्निः । शुचिव्रततम इति शुचिव्रत—तमः । शुचिः । विप्रः । शुचिः । कविः । शुचिः । रोचते । आहुत इत्या—हुतः । उदिति । अग्ने । शुचयः । तव । शुक्राः । भ्राजन्तः । ईरते । तव । ज्योतींषि । अर्चयः । आयुर्दा इत्या-युः—दाः । अग्ने । असि । आयुः । मे । (३) देहि । वर्चोदा इति वर्चः—दाः । अग्ने । असि । वर्चः । मे । देहि । तनूपा इति तनू—पाः । अग्ने । असि । तनुवम् । मे । पाहि । अग्ने । यत् । मे । तनुवाः । ऊनम् । तत् । मे । एति । पृण । चित्रावसो इति चित्र—वसो । स्वस्ति । ते । पारम् । अशीय । इन्धानाः । त्वा । शतम् । हिमाः । द्युमन्त इति द्यु—मन्तः । समिति । इधीमहि । वयस्वन्तः । वय-स्कृतमिति वयः—कृतम् । यशस्वन्तः । यशस्कृत-मिति यशः—कृतम् । सुवीरास इति सु—वीरासः ।

( अग्न्युपस्थानम् )

अदाभ्यम् । अग्ने । सपत्नदम्भनमिति सपत्न—दम्भनम् । वर्षिष्ठे । अधीति । नाके । समिति । त्वम् । अग्ने । सूर्यस्य । वर्चसा । अगथाः । समिति । ऋषीणाम् । स्तुतेन । समिति । प्रियेण । धाम्ना । त्वम् । अग्ने । सूर्यवर्चा इति सूर्य—वर्चाः । असि । समिति । माम् । आयुषा । वर्चसा । प्रजयेति प्र—जया । सृज ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ प्रथमकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः । )

---

चतुर्भिरनुवाकैः पुनराधानं समापितम् । अथ पञ्चममारभ्य दशमस्य पूर्वार्धपर्यन्तैरनुवाकैरग्न्युपस्थानमुच्यते ।

कल्पः—" अग्न्युपस्थानं व्याख्यास्याम उपतिष्ठत इति चोद्यमान आहवनीयमेवोपतिष्ठेत वचनादन्यमुत्तरामाहुतिमुपोत्थाय कवातिर्यङ्ङिवोपतिष्ठेतोपप्रयन्तो अध्वरमिति षड्भिः " इति ।

तत्र प्रथमा—

उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये ।
आरे अस्मे च शृण्वते ।, इति ।

अध्वरं यज्ञमुपप्रयन्तः प्राप्नुवन्तो वयमग्नयेऽग्निसंतोषार्थमुपस्थानमन्त्रं वोचेम वक्तारो भूयास्म । कीदृशायाग्नये । दूरादप्यनुग्रहेणास्मदीयं वचः शृण्वते ॥

अथ द्वितीया—

अस्य प्रत्नामनु द्युतꣳ शुक्रं दुदुह्रे अह्रयः । पयः सहस्रसामृषिम् ।, इति ।

---

१ ख. 'ष्ठेतेति व' । २ ख. 'दन्यामा' ।

अस्याग्नेः प्रत्नां पुरातनीमनुद्युतमनुकूलदीप्तिं गोस्थानीयामह्रयो लज्जामकुर्वन्त ऋत्विजः पयः क्षीरस्थानीयं शुक्रं ज्योतिर्दुदुह्रे दुहन्ति । कीदृशं शुक्रम् । सहस्रसां बहुधनप्रदमृषिं कर्मप्रवर्तकम् ॥

अथ तृतीया—

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अय-
म् । अपाꣳ रेताꣳसि जिन्वति ।, इति ।

अयमग्निरादित्यरूपेण दिवो द्युलोकस्य ककुदुच्छ्रितो मूर्धा शिरस्थानीयः । पृथिव्याः पतिर्दाहपाकादिकारित्वेन पालकोऽप्ययम् । किं च—अपां रेतांसि उदककार्याणि स्थावरजङ्गमशरीराणि जठराग्निरूपेण जिन्वति प्रीणयति ॥

अथ चतुर्थी—

अयमिह प्रथमो धायि धातृभिर्होता यजि-
ष्ठो अध्वरेष्वीड्यः । यमप्नवानो भृगवो वि-
रुरुचुर्वनेषु चित्रं विभ्वं विशेविशे ।, इति ।

अयमग्निरिह कर्मणि प्रथमः प्रधानभूतो धातृभिर्धारणाय प्रयतमानैरस्माभिर्धायि धार्यते । कीदृशोऽग्निः । होता देवानामाह्वाता यजिष्ठो मनुष्येभ्योऽतिशयेन यष्टाऽध्वरेषु यागेषु ईड्यः स्तुत्यः । किं च । अप्नवानसंज्ञको भृगुसंज्ञकाश्च मुनयो वनेषु स्वाश्रमेषु विशेविशे तत्तत्प्रजाभ्युदयार्थं यमग्निं चित्रं बहुयागाधारत्वेन विचित्रं विभ्वं व्याप्तं विरुरुचुर्विशेषेण दीपितवन्तः ॥

अथ पञ्चमी—

उभा वामिन्द्राग्नी आहुवध्या उभा राधसः
सह मादयध्यै । उभा दाताराविषाꣳ रयी-
णामुभा वाजस्य सातये हुवे वाम् ।, इति ।

इयं च प्रथमप्रपाठके व्याख्याता । हे इन्द्राग्नी युवामुभावप्याभिमुख्येन होतुमिच्छामि । पुनरपि युवामुभौ सह राधसोऽन्नेन मादयितुमिच्छामि । यस्माद्युवामुभावन्नानां धनानां च दातारौ तस्मादन्नस्य लाभाय युवामुभावाह्वयामि ॥

---

१ ख. च. °ज्ञका भृ° ।

(अग्न्युपस्थानम्)

अथ षष्ठी—

अयं ते योनिर्ऋत्वियो यतो जातो
अरोचथाः । तं जानन्नग्न आ रो-
हाथा नो वर्धया रयिम् ।, इति ।

हेऽग्नेऽयमाहवनीयप्रदेशस्ते योनिस्तव स्थानम् । स च योनिर्ऋत्विय ऋतुसंबन्धात्सर्वस्मिन्नप्यृतावनेन होमनिष्पत्तेः । यत आहवनीयप्रदेशाज्जात उद्भूतस्त्वमरोचथा दीप्यसे तं प्रदेशं जानन्मम स्थानमित्यवगच्छन्नारोह । अनन्तरमस्माकं धनं वर्धय ॥

कल्पः—"अग्न आयूꣳषि पवस इति षड्भिः संवत्सरे संवत्सरे सदा वा" इति ।

उपतिष्ठत इति शेषः । एतास्त्वमग्ने रुद्र इत्यत्र व्याख्याताः ।

तत्र प्रथमा—

अग्न आयूꣳषि पवस आ सुवोर्जमिषं
च नः । आरे बाधस्व दुच्छुनाम् ।, इति ।

हेऽग्ने त्वमस्मदायूंषि पवसे शोधयासि निर्दोषाणि करोषि । अस्माकं रसमन्नं चाऽऽनय, वैरिसेनां दूरे बाधस्व ॥

अथ द्वितीया—

अग्ने पवस्व स्वपा अस्मे वर्चः सुवी-
र्यम् । दधत्पोषꣳ रयिं मयि ।, इति ।

हेऽग्ने स्वपाः शोभनकर्मा त्वमस्मासु ब्रह्मवर्चसं समीचीनसामर्थ्यं च पवस्व शोधय । किं कुर्वन् । पुष्टिं धनं च मयि धारयन् ॥

अथ तृतीया—

अग्ने पावक रोचिषा मन्द्रया देव जि-
ह्वया । आ देवान्वक्षि यक्षि च ।, इति ।

हे पावकाग्ने देव रोचमानया मादयित्र्या जिह्वया देवानावांक्षि यक्षि च ॥

अथ चतुर्थी—

---

१ ख. °बन्धः, सर्व° । २ क. घ. ङ. च. °ति सं° । ३ ख. °वह य° ।

स नः पावक दीदिवोऽग्ने देवाꣳ इहाऽऽ
वह । उप यज्ञꣳ हविश्च नः ।, इति ।

हे पावकाग्ने दीदिवो दीप्यमानः स त्वं देवानिहाऽऽनय । अस्मदीयं यज्ञं हविश्चोपगच्छ ॥

अथ पञ्चमी—

अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः
कविः । शुची रोचत आहुतः ।, इति ।

अयमग्निरतिशुद्धव्रतयुक्तः, विप्राभिमानित्वादपि शुचिः, विद्वदभिमानित्वादपि शुचिः, अस्माभिः सर्वत्राऽऽहुतः शुद्धो दीप्यते ॥

अथ षष्ठी—

उदग्ने शुचयस्तव शुक्रा भ्राजन्त
ईरते । तव ज्योतीꣳष्यर्चयः ।, इति ।

हेऽग्ने तव शुचयः शुद्धाः शुक्रा रश्मयो भ्राजन्तो दीप्यमाना उद्गच्छन्ति । अर्चयितारस्तव ज्योतींषि प्राप्नुवन्तीति शेषः ॥

कल्पः—"आयुर्दा अग्न इति सिद्धमा चित्रावसो[2] स्वस्तीति चित्रावसुना सायमुपतिष्ठते" इति ।

पाठस्तु—

आयुर्दा अग्नेऽस्यायुर्मे देहि वर्चोदा अग्नेऽसि
वर्चो मे देहि तनूपा अग्नेऽसि तनुवं मे पाह्यग्ने
यन्मे तनुवा ऊनं तन्म आ पृण, इति ।

आपूरयेत्यर्थः । चतुर्ष्वेतेषु यजुःषु स्पष्टमन्यत् ॥

अथ यजुरन्तरम्—

चित्रावसो स्वस्ति ते पारमशीय, इति ।

हे चित्रावसो रात्रे तव पारं समाप्तिं स्वस्ति क्षेमेण प्राप्नवानि ॥

कल्पः[3]—"त्रिरर्वाग्वसुना प्रातरर्वाग्वसो स्वस्ति ते पारमशीयेन्धानास्त्वा शतꣳ हिमा इत्युपस्थाय" इति ।

---

१ ख. हे शोधका । २ क. 'सोऽग्निश्चित्रा' । ३ ख. 'ल्पः—' अर्वा' ।

( अग्न्युपस्थानम् )

अर्वागित्यादिः शाखान्तरमन्त्रः।

अत्रत्यमन्त्रपाठस्तु—

इन्धानास्त्वा शतꣳ हिमा द्युमन्तः समिधी-
महि वयस्वन्तो वयस्कृतं यशस्वन्तो यश-
स्कृतꣳ सुवीरासो अदाभ्यम्। अग्ने सप-
त्नदम्भनं वर्षिष्ठे अधि नाके।, इति।

हेऽग्ने त्वां समिद्भिरिन्धाना वयं शतसंख्याकान्हेमन्तोपलक्षितसंवत्सरान्द्युमन्तो दीप्तिमन्तः समिधीमहि लोके सम्यक्प्रख्याता भूयास्म। कीदृशं त्वां, वयस्कृतमन्नस्य कर्तारम्। यशस्कृतं कीर्तिप्रदम्। अदाभ्यं केनाप्यतिरस्कार्यम्। वर्षिष्ठेऽधिनाकेऽतिप्रौढस्वर्गविषये सपत्नदम्भनं विरोधिविनाशनम्। कीदृशा वयं, वयस्वन्तोऽन्नवन्तः। यशस्वन्तः कीर्तिमन्तः। सुवीरासः शोभनपुत्रादियुक्ताः॥

कल्पः—"चतस्रः समिध एकैकस्मिन्नाधाय सं त्वमग्ने सूर्यस्य वर्चसाऽगथा इत्यनुवाकशेषेणोपस्थाय" इति।

पाठस्तु—

सं त्वमग्ने सूर्यस्य वर्चसाऽगथाः समृषीणाꣳ
स्तुतेन सं प्रियेण धाम्ना। त्वमग्ने सूर्यवर्चा
असि सं मामायुषा वर्चसा प्रजया सृज॥, इति॥

हेऽग्ने त्वं सूर्यस्य वर्चसा तेजसा समगथाः संगतोऽसि। ऋषीणां स्तोत्रेण संगतोऽसि। प्रियेण स्थानेनाऽऽहवनीयदेशलक्षणेन संगतोऽसि। हेऽग्ने त्वं सूर्यसमानतेजा असि। मामायुरादिभिः संयोजय॥

अत्र विनियोगसंग्रहः—

"पूर्वस्याग्नेरुपस्थानमुपप्रेत्यनुवाकतः॥ १॥" इति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

---

( गार्हपत्याहवनीययोरुपस्थानम् )

( अथ प्रथमाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः । )

सं पंश्यामि प्रजा अहमिडंप्रजसो मानवीः । सर्वा भवन्तु नो गृहे । अम्भः स्थाम्भो वो भक्षीय महंः स्थ महो वो भक्षीय सहंः स्थ सहो वो भक्षीयोर्जः स्थोर्जं वो भक्षीय रेवंती रमंध्वमस्मिँल्लोकेऽस्मिन्गोष्ठेऽस्मिन्क्षयेऽस्मिन्योनांविहैव स्तेतो माऽपं गात बह्वीर्मे भूयास्त(१) सꣳहिताऽसि विश्वरूपीरा मोर्जा विशाऽऽ गौंपत्येनाऽऽ रायस्पोषेण सहस्रपोषं वंः पुष्यासं मयि वो रायंः श्रयन्ताम् । उपं त्वाऽग्ने दिवेदिंवे दोषांवस्तर्धिया वयम् । नमो भरंन्त एमंसि । राजंन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्धमानꣳ स्वे दमें । स नंः पितेवं सूनवेऽग्ने सूपायनो भंव । सचंस्वा नः स्वस्तयें । अग्ने (२) त्वं नो अन्तंमः । उत त्राता शिवो भंव वरूथ्यंः । तं त्वां शोचिष्ठ दीदिवः । सुम्नायं नूनमींमहे सखिंभ्यः । वसुंरग्निर्वसुंश्रवाः । अच्छां नक्षि द्युमत्तंमो रयिं दाः । ऊर्जा वंः पश्याम्यूर्जा मां पश्यत रायस्पोषेण वः पश्यामि रायस्पोषेण मा पश्यतेडांः स्थ

मधुकृतः स्योना माऽऽ विंशतेरा मदः। सहस्रपोषं वः पुष्यासम् (३) मयि वो रायः श्रयन्ताम्। तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। सोमानꣳ स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तं य औशिजम्। कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे। उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते। परि त्वाऽग्ने पुरं वयं विप्रꣳ सहस्य धीमहि। धृषद्वर्णं दिवेदिवे भेत्तारं भङ्गुरावतः। अग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासꣳ सुगृहपतिर्मया त्वं गृहपतिना भूयाः शतꣳ हिमास्तामाशिषमा शासे तन्तवे ज्योतिष्मतीं तामाशिषमा शासेऽमुष्मै ज्योतिष्मतीम्, (४)॥

( भूयास्त स्वस्तयेऽग्ने पुष्यासं धृषद्वर्णमेकान्नत्रिꣳशच्च। )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके
पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ प्रथमाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः। )

---

समिति। पश्यामि। प्रजा इति प्र—जाः। अहम्।

इडंप्रजस इतीडं—प्रजसः । मानवीः । सर्वाः । भवन्तु । नः । गृहे । अम्भः । स्थ । अम्भः । वः । भक्षीय । महः । स्थ । महः । वः । भक्षीय । सहः । स्थ । सहः । वः । भक्षीय । ऊर्जः । स्थ । ऊर्जम् । वः । भक्षीय । रेवतीः । रमध्वम् । अस्मिन् । लोके । अस्मिन् । गोष्ठ इति गो—स्थे । अस्मिन् । क्षये । अस्मिन् । योनौ । इह । एव । स्त । इतः । मा । अपेति । गात । बह्वीः । मे । भूयास्त । ( १ ) सꣳहितेति सं—हिता । असि । विश्वरूपीरिति विश्व—रूपीः । एति । मा । ऊर्जा । विश । एति । गौपत्येन । एति । रायः । पोषेण । सहस्रपोषमिति सहस्र—पोषम् । वः । पुष्यासम् । मयि । वः । रायः । श्रयन्ताम् । उपेति । त्वा । अग्ने । दिवेदिव इति दिवे—दिवे । दोषावस्तरिति दोषा—वस्तः । धिया । वयम् । नमः । भरन्तः । एति । इमसि । राजन्तम् । अध्वराणाम् । गोपामिति गो—पाम् । ऋतस्य । दीदिविम् । वर्धमानम् । स्वे । दमे । सः । नः । पितेव । इव । सूनवे । अग्ने । सूपायन इति सु—उपायनः । भव । सचस्व । नः । स्वस्तये । अग्ने । (२) त्वम् । नः । अन्तमः । उत । त्राता ।

शिवः । भव । वरूथ्यः । तम् । त्वा । शोचिष्ठ । दीदिवः । सुम्नाय । नूनम् । ईमहे । सखिभ्य इति सखि—भ्यः । वसुः । अग्निः । वसुश्रवा इति वसु—श्रवाः । अच्छ । नक्षि । द्युमत्तम इति द्युमत्—तमः । रयिम् । दाः । ऊर्जा । वः । पश्यामि । ऊर्जा । मा । पश्यत । रायः । पोषेण । वः । पश्यामि । रायः । पोषेण । मा । पश्यत । इडाः । स्थ । मधुकृत इति मधु—कृतः । स्योनाः । मा । एति । विशत । इराः । मदः । सहस्रपोषमिति सहस्र—पोषम् । वः । पुष्यासम् । (३) मयि । वः । रायः । श्रयन्ताम् । तत् । सवितुः । वरेण्यम् । भर्गः । देवस्य । धीमहि । धियः । यः । नः । प्रचोदयादिति प्र—चोदयात् । सोमानम् । स्वरणम् । कृणुहि । ब्रह्मणः । पते । कक्षीवन्तमिति कक्षी—वन्तम् । यः । औशिजम् । कदा । चन । स्तरीः । असि । न । इन्द्र । सश्चसि । दाशुषे । उपोपेत्युप—उप । इत् । नु । मघवन्निति मघ—वन् । भूयः । इत् । नु । ते । दानम् । देवस्य । पृच्यते । परीति । त्वा । अग्ने । पुरम् । वयम् । विप्रम् । सहस्य । धीमहि । धृषद्वर्णमिति धृषत्—वर्णम् । दिवेदिव इति दिवे—

दिवे । भेत्तारम् । भङ्गुरावत इति भङ्गुर—वतः । अग्ने । गृहपत इति गृह—पते । सुगृहपतिरिति सु—गृहपतिः । अहम् । त्वया । गृहपतिनेति गृह—पतिना । भूयासम् । सुगृहपतिरिति सु—गृहपतिः । मया । त्वम् । गृहपतिनेति गृह—पतिना । भूयाः । शतम् । हिमाः । ताम् । आशिषमित्या—शिषम् । एति । शासे । तन्तवे । ज्योतिष्मतीम् । ताम् । आशिषमित्या—शिषम् । एति । शासे । अमुष्मै । ज्योतिष्मतीम् । ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ प्रथमकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः । )

---

षष्ठेऽनुवाके गार्हपत्यस्य पुनरप्याहवनीयस्य चोपस्थानं सपरिकरमभिधीयते। कल्पः—" सं पश्यामि प्रजा अहमिति गृहान्प्रेक्षते " इति ।

पाठस्तु—

सं पश्यामि प्रजा अहमिडप्रजसो मानवीः । सर्वा भवन्तु नो गृहे॥, इति ।

अहं मनुष्यप्रजा इडप्रजसश्च सम्यक्पश्यामि । इडा धेनुस्तस्याः प्रजा अपत्यानीडप्रजसो मनुष्यरूपाश्च सर्वाः प्रजा अस्माकं गृहे तिष्ठन्तु ॥

कल्पः—" अम्भः स्थाम्भो वो भक्षीयेति गोष्ठमुपतिष्ठते " इति ।

पाठस्तु—

अम्भः स्थाम्भो वो भक्षीय महः स्थ

(गार्हपत्याहवनीययोरुपस्थानम्)

महो वो भक्षीय सहः स्थ सहो वो
भक्षीयोर्जः स्थोर्जं वो भक्षीय, इति।

अम्भः पीतोदकसारं महः पूज्यं सर्वैरादरणीयं सहो बलकरमूर्जं स्वादुतमरसरूपं यत्क्षीरादि तत्कारणत्वेन हे पशवस्तद्रूपाः स्थ। ततो युष्मदीयं तत्क्षीरादिकमस्माकं भक्ष्यमस्तु॥

कल्पः—"रेवती रमध्वमित्यन्तराऽग्नी तिष्ठञ्जपति" इति।

पाठस्तु—

रेवती रमध्वमस्मिँल्लोकेऽस्मिन्गोष्ठेऽस्मिन्क्षयेऽस्मिन्योनाविहैव स्तेतो माऽप गात बह्वीर्मे भूयास्त, इति।

हे रेवतीः पशवोऽस्मिन्भूलोके गोष्ठे व्रजविशेषे क्षये गृहविशेषे योनौ स्थानविशेषे रमध्वं क्रीडध्वम्। इहैव योनौ स्त सर्वदा तिष्ठत। इतः स्थानान्माऽपगात माऽपगच्छत। मे मदर्थमपत्यपरम्परया बहवो भूयास्त॥

कल्पः—"सꣳहिताऽसि विश्वरूपीरिति वत्समभिमृशति" इति।

पाठस्तु—

सꣳहिताऽसि विश्वरूपीरा मोर्जा विशाऽऽ गौपत्येनाऽऽ रायस्पोषेण सहस्रपोषं वः पुष्यासं मयि वो रायः श्रयन्ताम्॥, इति।

हे वत्स त्वं संहिताऽसि मात्रा संयुक्तोऽसि। विश्वरूपीरादरेण स्तनं पातुं वामतो दक्षिणतश्च पुनः पुनर्धावन्बहुरूपवदवभाससे। तादृक्त्वमूर्जा क्षीरादिरसनिमित्तेन मामाविश मत्समीपमागच्छ। गौपत्येन मदीयं बहुपशुस्वामित्वं निमित्तीकृत्य मामाविश। रायस्पोषेण धनपुष्टिनिमित्तेनापि मामाविश। सहस्रसंख्यया पुष्टिर्यथा भवति तथा युष्मान्पुष्यासम्। मयि युष्मदीयानि क्षीरादिधनान्याश्रयन्ताम्॥

कल्पः—"उप त्वाऽग्ने दिवेदिव इति तिसृभिर्गायत्रीभिर्गार्हपत्यमुपतिष्ठतेऽग्ने त्वं नो अन्तम इति चतसृभिश्च द्विपदाभिः स नो बोधि श्रुधी हवमुरुष्या णो अघायतः समस्मादित्येषा चतुर्थी भवति" इति।

तत्र प्रथमा गायत्री—

उप त्वाऽग्ने दिवेदिवे दोषावस्तर्धिया
वयम् । नमो भरन्त एमसि॥ , इति ।

हेऽग्ने प्रतिदिनं वयं त्वामुपेमसि उपगच्छामः । किं कुर्वन्तः । दोषावस्तः सायं प्रातश्च धिया नमो भरन्तो नमस्कारं संपादयन्तः ॥

अथ द्वितीया—

राजन्तमध्वराणां गोपामृतस्य दीदि-
विम् । वर्धमानꣳ स्वे दमे॥ , इति ।

कीदृशं त्वाम् । अध्वराणां राजन्तं यज्ञराजं, गोपां गवां पालकम्, ऋतस्य दीदिविं सत्येन द्योतमानं, स्वे दमे स्वकीयेऽग्निहोत्रगृहे हविर्भिर्वर्धमानम् ॥

अथ तृतीया—

स नः पितेव सूनवेऽग्ने सूपायनो
भव । सचस्वा नः स्वस्तये ॥, इति ।

हेऽग्ने स तादृशस्त्वं नोऽस्मदर्थं सूपायनः प्राप्तुं शक्यो भव । यथा पुत्रार्थं पिता सूपायनस्तद्वदस्माकं स्वस्तये क्षेमाय सचस्व समवेतो भव ॥

अथ प्रथमा द्विपदा—

अग्ने त्वं नो अन्तमः । उत
त्राता शिवो भव वरूथ्यः॥, इति ।

हेऽग्ने त्वं नोऽस्माकमन्तमोऽन्तिकतमो भव । उतापि च त्राता शिवश्च सन्वरूथ्यो वरूथे गृहे नित्यं संनिहितो भव ॥

अथ द्वितीया—

तं त्वा शोचिष्ठ दीदिवः । सुम्ना-
य नूनमीमहे सखिभ्यः॥ , इति ।

हे वह्ने शोचिष्ठ दीदिवः शुद्धतम दीप्यमान सखिभ्यः सखीनामस्माकं सुम्नाय सुखाय नूनं तं पूर्वोक्तगुणयुक्तं त्वामीमहे प्राप्नुमः ॥

अथ तृतीया—

वसुरग्निर्वसुश्रवाः । अच्छा
नक्षि द्युमत्तमो रयिं दाः॥, इति

( गार्हपत्याहवनीययोरुपस्थानम् )

वसुर्वसुमानयमग्निर्वसुरुद्रादिदेवैरादरेणैव श्रूयत इति वसुश्रवाः। हे तादृगग्नेऽच्छास्मदभिमुखो नक्षि प्राप्नुहि। द्युमत्तमोऽतिशयेन दीप्यमानो रयिं दा धनं देहि। चतुर्थी तु शाखान्तरगता॥

कल्पः—"ऊर्जा वः पश्याम्यूर्जा मा पश्यतेति गृहान्प्रेक्षते पशून्वा" इति।

पाठस्तु—

ऊर्जा वः पश्याम्यूर्जा मा पश्यत रायस्पोषेण
वः पश्यामि रायस्पोषेण मा पश्यतेडाः स्थ
मधुकृतः स्योना माऽऽविशतेरा मदः। सहस्र-
पोषं वः पुष्यासं मयि वो रायः श्रयन्ताम्॥, इति।

हे गृहगताः पशवः क्षीरादिरसनिमित्तेन धनपुष्टिनिमित्तेन[च] युष्मानहं पश्यामि। यूयमपि तथा मां पश्यत। हे इडा गावो यूयं मधुकृतो मधुरघृतकारिण्यः स्थ। स्योनाः सुखकरा इरा अन्नवत्यो मदो मादयित्र्यो मामाविशत। सहस्रसंख्यया पुष्टिर्यथा भवति तथा युष्मान्पुष्यासम्। युष्माकं धनानि क्षीरादीनि मयि श्रयन्ताम्॥

कल्पः—"तत्सवितुर्वरेण्यꣳसोमानꣳस्वरणं मित्रस्य चर्षणीधृतः प्र स मित्र कदा चन स्तरीरसि कदा चन प्रयुच्छसि परि त्वाऽग्ने पुरं वयमित्युपस्थाय" इति। आहवनीयमिति लभ्यते।

तत्र प्रथमैवमाम्नाता—

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि।
धियो यो नः प्रचोदयात्॥, इति।

यः सविताऽस्माकं बुद्धीः प्रेरयति तस्य सवितुर्देवस्य वरणीयं तद्भर्गस्तेजो ध्यायेम॥

अथ द्वितीया—

सोमानꣳ स्वरणं कृणुहि ब्रह्मण-
स्पते। कक्षीवन्तं य औशिजम्॥, इति।

ब्रह्मणः परिवृढस्य कर्मणः पते स्वामिन्नग्ने यस्त्वामौशिजमुशिजः पुत्रं कक्षीवन्तमृषिं कर्मप्रवर्तकं कृतवानसीत्यध्याहारः। तादृशस्त्वं मामपि सोमानं सोमयागानां स्वरणमुपदेष्टारं कुरु। मित्रस्य प्र स मित्रेति द्वयं नात्राऽऽम्नातम्॥

अथ पञ्चमी—

कदा चन स्तरीरसि नेन्द्र सश्चसि
दाशुषे। उपोपेन्नु मघवन्भूय इन्नु
ते दानं देवस्य पृच्यते॥, इति।

हे इन्द्र परमैश्वर्ययुक्ताग्ने कदाचिदपि स्तरीर्हिंसको नासि। किं तु दाशुषे हविर्दत्तवते यजमानार्थमुपोपेन्नु अत्यन्तसमीप एव सश्चसि समवेतोऽसि। हे मघवन्निन्द्रसदृशाग्ने भूय इन्नु पुनरपि देवस्य ते तव दानं पृच्यते फलदानार्थम-स्माभिः संयुज्यते। कदा चन प्रयुच्छसीत्येषाऽन्यत्राऽऽम्नाता॥

अथ सप्तमी—

परि त्वाऽग्ने पुरं वयं विप्रꣳ सहस्य धीमहि।
धृषद्वर्णं दिवेदिवे भेत्तारं भङ्गुरावतः॥, इति।

सहसि बले भवः सहस्यः। हे सहस्य बलवन्नग्ने वयं त्वां प्रतिदिनं परिधीमहि परितो धारयाम। कीदृशं त्वाम्। पुरमभिमतानां पूरकं, विप्रं ब्राह्मणाभिमा-निनं, धृषद्वर्णं वैरिणम्। धृषन्नभिभवन्वर्ण आकारो यस्य तादृशम्। भङ्गुरा-वतो भञ्जनशीलव्यापारोपेतस्य रक्षसो भेत्तारम्॥

कल्पः—"अग्न आयूंषि पवस इत्याग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठतेऽग्ने गृहपत इति च पुत्रस्य नाम गृह्णाति तामाशिषमाशासे तन्तव इत्यजातस्यामुष्मा इति जातस्य" इति।

आग्निपावमान्यौ त्वन्यत्राऽऽम्नाते।

मन्त्रान्तरपाठस्तु—

अग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना
भूयासꣳ सुगृहपतिर्मया त्वं गृहपतिना भूयाः
शतꣳ हिमास्तामाशिषमा शासे तन्तवे ज्यो-
तिष्मतीं तामाशिषमा शासेऽमुष्मै ज्योतिष्म-
तीम्॥, इति।

हे गृहपालकाग्ने गृहपतिना त्वयाऽनुगृहीतोऽहं शोभनो गृहपतिर्भूयासम्।

---

१ ख. °दानम°। २ ख. °ति पु°।

( पञ्चमानुवाकोक्तमन्त्रव्याख्यानम् )

तथा गृहपतिना मया पूजितस्त्वं गृहस्वामी भूयाः । कियन्तं कालम् । शतं हिमाः । हिमशब्दोपलक्षितहेमन्तर्तुसहिताञ्शतसंवत्सरान् । अहं तन्तव उत्पत्स्यमानपुत्रसंतानाय ज्योतिष्मतीं ब्रह्मवर्चसयुक्तां तामाशिषमायुरारोग्यैश्वर्याभिवृद्धिरूपामाशासे । एवममुष्मै जाताय देवदत्तादिनाम्ने ॥

अत्र विनियोगसंग्रहः—

" सं प मेक्ष्य गृहानम्भः स्थ गोष्ठमुपतिष्ठते ।
रेवान्तराऽग्नी जपति संहिता वत्सकं स्पृशेत् ॥ १ ॥
उप त्वा पश्चिमं वह्निं षण्मन्त्रैरुपतिष्ठते ।
ऊर्जा मेक्ष्य गृहांस्तत्सचतुर्भिः पूर्वपावकम् ।
उपस्थायाग्न इत्यस्मात्पश्चिमं चोपतिष्ठते ॥ २ ॥ " इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ प्रथमाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः । )

---

अयंज्ञो वा एष योऽसामोपंप्रयन्तों अध्वरमित्याह स्तोमंमेवास्मैं युनक्त्युपेत्याह प्रजा वै पशव उपेमं लोकं प्रजामेव पशूनिमं लोकमुपैत्यस्य प्रत्नामनु द्युतमित्याह सुवर्गो वै लोकः प्रत्नः सुवर्गमेव लोकꣳ समारोहत्यग्निर्मूर्धा दिवः ककुदित्याह मूर्धानम् ( १ ) एवैनꣳ समानानां करोत्यथो देवलोकादेव मंनुष्यलोके प्रतिं तिष्ठत्ययमिह प्रंथमो धायि धातृभिरित्याह मुख्यमेवैनं करोत्युभा वांमि-

न्द्राग्नी आहुवध्या इत्याहौजो बलमेवाव रुन्धेऽयं ते योनिर्ऋत्विय इत्याह पशवो वै रयिः पशूनेवाव रुन्धे षड्भिरुप तिष्ठते षड्वै (२) ऋतवं ऋतुष्वेव प्रति तिष्ठति षड्भि-रुत्तराभिरुप तिष्ठते द्वादश सं पद्यन्ते द्वादश मासाः संवत्सरः संवत्सर एव प्रति तिष्ठति यथा वै पुरुषोऽश्वो गौर्जीर्यत्येवमग्निराहितो जीर्यति संवत्सरस्य परस्तादाग्निपावमानीभि-रुप तिष्ठते पुनर्नवमेवैनमजरं करोत्यथो पुना-त्येवोप तिष्ठते योग एवास्यैष उप तिष्ठते (३) दम एवास्यैष उप तिष्ठते याच्ञैवास्यैषोप तिष्ठते यथा पापीयाञ्छ्रेयस आहृत्य नमस्यति तादृगेव तदायुर्दा अग्नेऽस्यायुर्मे देहीत्याहाऽऽ-युर्दा ह्येष वर्चोदा अग्नेऽसि वर्चो मे देहीत्याह वर्चोदा ह्येष तनूपा अग्नेऽसि तनुवं मे पाही-त्याह (४) तनूपा ह्येषोऽग्ने यन्मे तनुवा ऊनं तन्म आ पृणेत्याह यन्मे प्रजायै पशूना-मूनं तन्म आ पूरयेति वावैतदाह चित्रावसो स्वस्ति ते पारमशीयेत्याह रात्रिर्वै चित्रावसु-रव्युष्ट्यै वा एतस्यै पुरा ब्राह्मणा अभैषुर्व्युष्टि-

मेवावं रुन्ध इन्धानास्त्वा शतम् (५) हिमा इत्याह शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठत्येषा वै सूर्मी कर्णकावत्येतया ह स्म वै देवा असुराणाꣳ शततर्हाꣳस्तृꣳहन्ति यदेतया समिधमादधाति वज्रमेवैतच्छंतघ्नीं यजमानो भ्रातृव्याय प्र हरति स्तृत्या अच्छम्बट्कारꣳ* सं त्वमग्ने सूर्यस्य वर्चसाऽगथा इत्याहैतत्त्वमसीदमहं भूयासमिति वावैतदाह त्वमग्ने सूर्यवर्चा असीत्याहाऽऽशिषमेवैतामा शास्ते (६) ॥

(मूर्धानꣳ षड्वा एष उप तिष्ठते पाहीत्याह शतमहꣳ षोडश च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

(अथ प्रथमाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः।)

---

अयज्ञः। वै। एषः। यः। असामा। उपप्रयन्त इत्युप—प्रयन्तः। अध्वरम्। इति। आह। स्तोमम्। एव। अस्मै। युनक्ति। उपेति। इति। आह। प्रजेति प्र—जा। वै। पशवः। उपेति। इमम्। लोकम्। प्रजामिति प्र—जाम्। एव। पशून्।

---

* अच्छम्बट्कारामिति वैदिकपाठः।

इमम् । लोकम् । उपेतिं । एति । अस्य । प्रत्नाम् । अन्वितिं । द्युतम् । इतिं । आह । सुवर्ग इतिं सुवः—गः । वै । लोकः । प्रत्नः । सुवर्गमितिं सुवः—गम् । एव । लोकम् । समारोहतीतिं सम्—आरोहति । अग्निः । मूर्धा । दिवः । ककुत् । इतिं । आह । मूर्धानम् । (१) एव । एनम् । समानानाम् । करोति । अथो इतिं । देवलोकादितिं देव—लोकात् । एव । मनुष्यलोक इतिं मनुष्य—लोके । प्रतीतिं । तिष्ठति । अयम् । इह । प्रथमः । धायि । धातृभिरितिं धातृ—भिः । इतिं । आह । मुख्यम् । एव । एनम् । करोति । उभा । वाम् । इन्द्राग्नी इतीन्द्र—अग्नी । आहुवध्यै । इतिं । आह । ओजः । बलम् । एव । अवेतिं । रुन्धे । अयम् । ते । योनिः । ऋत्वियः । इतिं । आह । पशवः । वै । रयिः । पशून् । एव । अवेतिं । रुन्धे । षड्भिरिति षट्—भिः । उपेतिं । तिष्ठते । षट् । वै । (२) ऋतवः । ऋतुषु । एव । प्रतीतिं । तिष्ठति । षड्भिरितिं षट्—भिः । उत्तराभिरित्युत्—तराभिः । उपेतिं । तिष्ठते । द्वादश । समितिं । पद्यन्ते । द्वादश । मासाः । संवत्सर इतिं सं—वत्सरः । संवत्सर इतिं सं—वत्सरे । एव ।

प्रतीति। तिष्ठति। यथा। वै। पुरुषः। अश्वः। गौः। जीर्यति। एवम्। अग्निः। आहित इत्या—हितः। जीर्यति। संवत्सरस्येति सं—वत्सरस्य। परस्तात्। आग्निपावमानीभिरित्याग्नि—पावमानीभिः। उपेति। तिष्ठते। पुनर्नवमिति पुनः—नवम्। एव। एनम्। अजरम्। करोति। अथो इति। पुनाति। एव। उपेति। तिष्ठते। योगः। एव। अस्य। एषः। उपेति। तिष्ठते। (३) दमः। एव। अस्य। एषः। उपेति। तिष्ठते। याच्ञा। एव। अस्य। एषा। उपेति। तिष्ठते। यथा। पापीयान्। श्रेयसे। आहृत्येत्या—हृत्य। नमस्यति। तादृक्। एव। तत्। आयुर्दा इत्यायुः—दाः। अग्ने। असि। आयुः। मे। देहि। इति। आह। आयुर्दा इत्यायुः—दाः। हि। एषः। वर्चोदा इति वर्चः—दाः। अग्ने। असि। वर्चः। मे। देहि। इति। आह। वर्चोदा इति वर्चः—दाः। हि। एषः। तनूपा इति तनू—पाः। अग्ने। असि। तनुवम्। मे। पाहि। इति। आह। (४) तनूपा इति तनू—पाः। हि। एषः। अग्ने। यत्। मे। तनुवाः। ऊनम्। तत्। मे। एति। पृण। इति। आह। यत्। मे। प्रजाया इति प्र—

जायै । पशूनाम् । ऊनम् । तत् । मे । एति । पूरय । इति । वाव । एतत् । आह । चित्रावसो इति चित्र—वसो । स्वस्ति । ते । पारम् । अशीय । इति । आह । रात्रिः । वै । चित्रावसुरिति चित्र—वसुः । अव्युष्ट्या इत्यवि—उष्ट्यै । वै । एतस्यै । पुरा । ब्राह्मणाः । अभैषुः । व्युष्टिमिति वि—उष्टिम् । एव । अवेति । रुन्धे । इन्धानाः । त्वा । शतम् । (५) हिमाः । इति । आह । शतायुरिति शत—आयुः । पुरुषः । शतेन्द्रिय इति शत—इन्द्रियः । आयुषि । एव । इन्द्रिये । प्रतीति । तिष्ठति । एषा । वै । सूर्मी । कर्णकावतीति कर्णक—वती । एतया । ह । स्म । वै । देवाः । असुराणाम् । शततर्हानिति शत—तर्हान् । तृंहन्ति । यत् । एतया । समिधमिति सम्—इधम् । आदधातीत्या—दधाति । वज्रम् । एव । एतत् । शतघ्नीमिति शत—घ्नीम् । यजमानः । भ्रातृव्याय । प्रेति । हरति । स्तृत्यै । अच्छम्बट्कारमित्यच्छम्बट्—कारम् । समिति । त्वम् । अग्ने । सूर्यस्य । वर्चसा । अगथाः । इति । आह । एतत् । त्वम् । असि । इदम् । अहम् । भूयासम् । इति । वाव । एतत् । आह । त्वम् । अग्ने । सूर्यवर्चा इति सूर्य—वर्चाः । असि । इति । आह ।

(पञ्चमानुवाकोक्तमन्त्रव्याख्यानम्)

आशिषमित्या--शिषम्। एव। एताम्। एति। शास्ते (६)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः॥ ७॥

(अथ प्रथमकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः।)

सप्तमेऽनुवाके पञ्चमानुवाकोक्ता मन्त्रा व्याख्यायन्ते। उपमेत्यादिमन्त्रसंघोपस्थानेन ज्योतिष्टोमे त्रिवृत्पञ्चदशादिस्तोमवदग्निहोत्रेऽपि स्तोमयोग उपचर्यत इत्याह—

अयज्ञो वा एष योऽसामोपप्रयन्तो अध्वरमित्याह स्तोममेवास्मै युनक्ति, इति।

यः सामरहितः स यज्ञ एव न भवति। ऋग्भेदादावृत्तिभेदाच्च निष्पन्नः सामसंघः स्तोमः। तं चास्मिन्नग्निहोत्रे मन्त्रसंघेन संपादयति॥

उपशब्दसूचितं दर्शयति—

उपेत्याह प्रजा वै पशव उपेमं लोकं प्रजामेव पशूनिमं लोकमुपैति, इति।

प्रजाः पशवश्च भूलोकमुपगच्छति। तस्माद्यजमानोऽप्युपशब्दसामर्थ्यात्प्रजां पशूंश्चोपेत्य तद्युक्तं भूलोकमुपैति॥

प्रत्नशब्दसूचितमाह—

अस्य प्रत्नामनु द्युतमित्याह सुवर्गो वै लोकः प्रत्नः सुवर्गमेव लोकꣳ समारोहति, इति।

स्वर्गलोकस्य चिरंतनत्वेन प्रत्नशब्दसूचितत्वात्तेन शब्देन स्वर्गारोहो भवति॥

मूर्धशब्दपृथिवीशब्दाभ्यां सूचितं दर्शयति—

अग्निर्मूर्धा दिवः ककुदित्याह मूर्धानमेवैनꣳ समानानां करोत्यथो देवलोकादेव मनुष्यलोके प्रति तिष्ठति, इति।

मूर्धानं श्रेष्ठमेनं यजमानं समानानां समानजातीयानां मध्ये करोति। अपि च देवलोकादागत्य मनुष्यलोक एव प्रतिष्ठितो भवतीत्यर्थः ॥

प्रथमशब्दसूचितं दर्शयति—

अयमिह प्रथमो धायि धातृभिरि-
त्याह मुख्यमेवैनं करोति, इति।

इन्द्रस्य बलाभिमानित्वादग्नेश्च तेजोभिमानित्वाच्छब्दद्वयेनोभयप्राप्तिः सूच्यत इत्याह—

उभा वामिन्द्राग्नी आहुवध्या इत्या-
हौजो बलमेवाव रुन्धे, इति।

मन्त्रगतं रयिशब्दं व्याचष्टे—

अयं ते योनिर्ऋत्विय इत्याह पशवो
वै रयिः पशूनेवाव रुन्धे, इति।

पूर्वोत्तरषट्काभ्यां प्रतिदिनमुपस्थानं विधत्ते—

षड्भिरुप तिष्ठते षड्वा ऋतव ऋतुष्वेव
प्रति तिष्ठति षड्भिरुत्तराभिरुप तिष्ठते
द्वादश सं पद्यन्ते द्वादश मासाः संव-
त्सरः संवत्सर एव प्रति तिष्ठति, इति।

उपप्रयन्त इत्यादिकं पूर्वषट्कम्। अग्न आयूंषीत्यादिकमुत्तरषट्कम् ॥

पूर्वषट्केन यथा प्रतिदिनमुपस्थानं तद्वदुत्तरेणापि प्राप्ते कालविशेषं विधत्ते—

यथा वै पुरुषोऽश्वो गौर्जीर्यत्येवमग्नि-
राहितो जीर्यति संवत्सरस्य परस्ता-
दाग्निपावमानीभिरुप तिष्ठते पुनर्नवमे-
वैनमजरं[1] करोत्यथो पुनात्येव, इति।

पुरुषादीनां चिरकालेनेवाग्नेः संवत्सरे प्राप्तां जरां निवार्य नूतनशरीरं शोधयितुं संवत्सरादूर्ध्वमुपस्थानम्। अग्निदेवतायाः पवमानदेवतायाश्च संब-

---

१ ख. 'ले देहो यथा जीर्यति तथाऽग्नेः।

